नीत्वा पितुः समीपं तु लालनीयौ प्रयत्नतः । तपसाऽऽराधयिष्यामि रामं काममिह स्थिता १०
वाच्यं त्वया महाभाग पूज्यपादाभिवन्दनम् । सर्वेभ्यः कुशलं चापि गत्वेतो मदपेक्षया ॥१०
पुत्रौ समादिशत्सीता गच्छतं पितुरन्तिकम् । शुश्रूषणीय एवासौ भवद्भ्यां स्वपदप्रदः ॥ १०
आज्ञप्तावप्यनिच्छन्तौ तौ कुमारौ कुशीलवौ । वाल्मीकिवचनात्तत्र जग्मतुश्च सलक्ष्मणौ ॥ ११
वाल्मीकेरेव पादाब्जसमीपं तत्सुतौ गतौ । लक्ष्मणोऽपि ववन्दे तं गत्वा बालकसंयुतः ॥ ११
वाल्मीकिर्लक्ष्मणस्तौ च कुमारौ मिलिता अमी । सभायां संस्थितं रामं ज्ञात्वा च जग्मुरुत्सुका
लक्ष्मणः प्रणिपत्याथ सीतावाक्यादि सर्वशः । कथयामास रामाय हर्षशोकयुतः सुधीः ॥ ११
सीतासंदेशवाक्येभ्यो रामो मूर्छां समन्वभूत् । संज्ञामवाप्य चोवाच लक्ष्मणं नयकोविदम् ॥११

श्रीराम उवाच—

गच्छ मित्र पुनस्तत्र यत्नेन महता च ताम् । शीघ्रमानय भद्रं ते मद्वाक्यानि निवेद्य च ॥ ११
अरण्ये किं तपस्यन्त्या गतिरन्या विचिन्तिता । श्रुता दृष्टाऽथवा मत्तो यन्नाऽऽगच्छसि जानकि
त्वदिच्छया त्वमेवेतो गताऽरण्यं मुनिप्रियम् । पूजिता मुनिपत्न्यस्ता दृष्टा मुनिगणास्त्वया ॥
पूर्णो मनोरथस्तेऽद्य किं नाऽऽगच्छसि भामिनि । न दोषं मयि पश्येस्त्वं स्वात्मेच्छाया विलोकनात्
गत्वा गत्वाऽथ वामोरु पतिरेव गतिः स्त्रियाः । निर्गुणोऽपि गुणाम्भोधिः किं पुनर्मनसेप्सितः ।
या या क्रिया कुलस्त्रीणां सा सा पत्युः प्रतुष्टये । पूर्वमेव प्रतुष्टोऽहमद्य तु सुतरां त्वयि ॥ १२
यागो जपस्तपो दानं व्रतं तीर्थं द(ग)यादिकम् । देवाश्च मयि संतुष्टे तुष्टमेतदसंशयम् ॥ १२

शेष उवाच—

इति संदेशमापीय सीतां प्रति जगत्पतेः । आह लक्ष्मण आत्मेशमानतः प्रणयाद्धरौ ॥ १२

लक्ष्मण उवाच—

सीतानयनमुद्दिश्य प्रसन्नस्त्वं यदूचिवान् । कथयिष्यामि त्वद्वाक्यं विनयेन समन्वितम् ॥ १२
इत्युक्त्वा पादयोर्नत्वा रघुनाथस्य लक्ष्मणः । जगाम त्वरितः सीतां रथे तिष्ठन्महाजवे ॥ १२
वाल्मीकिः श्रीयुतौ वीक्ष्य रामपुत्रौ महौजसौ । उवाच स्मितमाधाय मुखं कृत्वा मनोहरम् ॥१२

वाल्मीकिरुवाच—

युवां प्रगायतां पुत्रौ रामचारित्रमद्भुतम् । वीणां वै वादयन्तौ वां कलगानेन शोभितम् ॥ १२
इत्युक्तौ तौ सुतौ रामचरित्रं बहुपुण्यदम् । अगायतां महाभागौ सुवाक्यपदचित्रितम् ॥ १२
यस्मिन्धर्मविधिः साक्षात्पातिव्रत्यं तु यत्स्थितम् । भ्रातृस्नेहो महान्यत्र गुरुभक्तिस्तथैव च १२
स्वामिसेवकयोर्यत्र नीतिर्मूर्तिमती किल । अधर्मकरशास्तिर्वै यत्र साक्षाद्रघूद्वहात् ॥ १२९
तद्गानेन जगद्व्याप्तं दिवि देवा अपि स्मिताः । किंनरा अपि यद्गानं श्रुत्वा मूर्छामिताः क्षणात् ॥
वीणाया रणितं श्रुत्वा तालमानेन शोभितम् । निखिला परिषत्तत्र शालभञ्जीव चित्रिता ॥१३१
हर्षादश्रूणि मुञ्चन्ति रामाद्या भूमिपास्तदा । तद्गानपञ्चमालापमोहिताश्चित्रितोपमाः ॥ १३
तत्र रामः सुतौ दृष्ट्वा महागानविमोहकौ । अदात्ताभ्यां सुवर्णस्य लक्षं लक्षं पृथक्पृथक् ॥ १३
तदा दानपरं दृष्ट्वा वाल्मीकिं मुनिसत्तमम् । अब्रूतां प्रहसन्तौ तौ किंचिद्वक्रभ्रुवोर्धरौ ॥ १३

कुशलवावूचतुः—

मुने महानयोऽनेन क्रियते भूमिपेन वै । यदावाभ्यां सुवर्णानि दातुमिच्छति लोभयन् ॥ १३

१ न. °ल्मीकिं व° । २ क. ख. ग. छ. ज. झ. त. थ. द. न. स्थिताः ।

ग्रहो ब्राह्मणानां शस्यते नेतरेषु वै । प्रतिग्रहपरो राजा नरकायैव कल्पते ॥ १३६
योः कृपया मुक्तं राज्यं भुङ्क्ते महीपतिः। कथं दातुं सुवर्णानि वाञ्छति श्रेयसाऽन्वितः ॥१३७
युक्तवन्तौ तौ दृष्ट्वा वाल्मीकिः कृपया युतः। अशंसच्चुम्बमपितरं जानीथा नीतिविचमौ ॥ १३८
श्रुत्वा मुनेर्वाक्यं बालकौ पितृपादयोः । लग्नौ विनयसंयुक्तौ मातृभक्त्याऽतिनिर्मलौ॥१३९
ो बालौ दृढं स्वाङ्गे परिरभ्य मुदाऽन्वितः। मेने स्वीयौ तदा धर्मौ मूर्तिमन्तावुपस्थितौ १४०
ाऽपि रामसुतयोर्वीक्ष्य वक्त्रे मनोरमे । जानकीपतिभक्तित्वं सत्यं मेने मुनीश्वर ॥ १४१

व्यास उवाच—

शेषमुखप्रोक्तं श्रुत्वा वात्स्यायनोऽब्रवीत् । रामायणं श्रोतुमनाः सर्वधर्मसमन्वितम् ॥ १४२

वात्स्यायन उवाच—

स्मिन्काले कृतं स्वामिन्रामायणमिदं महत् । कस्माच्चकार किं तत्र वर्णनं किं वदस्व तत् ॥१४३

शेष उवाच—

कदा गतवान्विभो वाल्मीकिर्विपिनं महत् । यत्र तालास्तमालाश्च किंशुका यत्र पुष्पिताः॥१४४
तकी यत्र रजसा कुर्वती सौरभं वनम् । शशिप्रभेव महती दृश्यते शुभ्रवर्णभृत् ॥ १४५
म्पको बकुलश्चापि कोविदारः कुरण्टकः । अनेके पुष्पिता यत्र पादपाः शोभने वने ॥ १४६
ोकिलानां विरावेण षट्पदानां च शब्दितैः । संघुष्टं सर्वतो रम्यं मनोहरवयोन्वितम् ॥ १४७
त्र क्रौञ्चयुगं रम्यं कामबाणप्रपीडितम् । परस्परं प्रहृषितं रेमे स्निग्धतया स्थितम् ॥ १४८
दा व्याधः समागत्य तयोरेकं मनोहरम् । अवधीन्निर्दयः कश्चिन्मांसास्वादनलोलुपः ॥ १४९
दा क्रौञ्ची व्याधहतं स्वपतिं वीक्ष्य दुःखिता । विललाप भृशं दुःखान्मुञ्चती रावमुच्चकैः १५०
दा मुनिः प्रकुपितो निषादं क्रौञ्चघातकम् । शशाप वार्युपस्पृश्य सरितः पावनं शुभम् ॥ १५१
ा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चपक्षिणोरेकमवधीः काममोहितम्॥१५२
दा प्रबन्धं श्लोकस्य जातं मत्वा ह्यनु द्विजाः । ऊचुर्मुनिं प्रहृष्टास्ते शंसन्तः साधु साध्विति ॥
ामिञ्शापोदिते वाक्ये भारती श्लोकमातनोत् । अत्यन्तं मोहनो जातः श्लोकोऽयं मुनिसत्तम
दा मुनिः प्रहृष्टात्मा बभूव वाडवर्षभः । तस्मिन्काले समागत्य ब्रह्मा पुत्रैः समन्वितः ॥ १५५
चो जगाद वाल्मीकिं धन्योऽसि त्वं मुनीश्वर। भारती त्वन्मुखे स्थित्वा [*श्लोकत्वं समपद्यत
स्माद्रामायणं रम्यं कुरुष्व मधुराक्षरम् । येन ते विमला कीर्तिराकल्पान्तं भविष्यति ॥ १५७
न्या सैव मुखे वाणी] रामनाम्ना समन्विता । अन्या कामकथा नृणां जनयत्येव सूतकम् १५८
स्मात्कुरुष्व रामस्य चरितं लोकविश्रुतम् । येन स्यात्पापिनां पापहानिरेव पदे पदे ॥ १५९
त्युक्त्वाऽन्तर्दधे स्रष्टा सर्वदेवैः समन्वितः । ततः स चिन्तयामास कथं रामायणं भवेत् ॥ १६०
दा ध्यानपरो जातो नद्यास्तीरे मनोरमे । तस्य चेतस्यसौ रामः प्रादुर्भूतो मनोहरः ॥ १६१
ीलोत्पलदलश्यामं रामं राजीवलोचनम् । निरीक्ष्य तस्य चरितं भूतं भावि भवच्च यत् ॥१६२
दाऽत्यन्तं मुदं प्राप्तो रामायणमथासृजत् । मनोरमपदैर्युक्तं वृत्तैर्बहुविधैरपि ॥ १६३

* एतच्चिह्नान्तर्गतः पाठः क. ख. च. छ. ज. ञ. ड. ण. त. थ. द. न. पुस्तकस्थः ।

१ क. च. ज. ञ. ण. त. कुरम्बकः । ख. छ. कुरङ्गकः । २ ज. थ. प्रहर्षितं । ३ न. °प चाप्युप° । ४ क. ख. ग. ङ. च. छ. ज. झ. ञ. ट. ठ. ड. ढ. ण. त. थ. ध. °तः पुण्यपापहम् । ५ ग. घ. ङ. झ. ट. ठ. ढ. ध. °हितः । त° । ज. ण. त. थ. थ. द. न. वाडवर्षभ ।

षट्काण्डानि सुरम्याणि यत्र रामायणेऽनघ। बालमारण्यकं चान्यत्किष्किन्धा सुन्दरं तथा१०
युद्धमुत्तरमन्यच्च *षडेतानि महामते। शृणुयाद्यो नरः पुण्यात्सर्वपापैः प्रमुच्यते॥ १०
तत्र बाले तु संतुष्टः पुत्रेष्ट्या चतुरः सुतान्। प्राप पङ्क्तिरथः साक्षाद्धरिं ब्रह्म सनातनम्॥ ११०
स कौशिकमखं गत्वा सीतामुद्राह्य भार्गवम्। आगत्य पुरमुत्कृष्टो यौवराज्यप्रकल्पनम्॥ ११
मातृवाक्याद्वनं प्रागाद्गङ्गामुत्तीर्य पर्वतम्। चित्रकूटं महिलया लक्ष्मणेन समन्वितः॥ ११
भरतस्तं वने श्रुत्वा जगाम भ्रातरं नयी। तमप्राप्य स्वयं नन्दिग्रामे वासमचीकरत्॥ १का
बालमेतच्छृणुष्वान्यदारण्यकसमुद्भवम्। मुनीनामाश्रमे वासस्तत्र तत्रोपवर्णनम्॥ ११
शूर्पणख्या नसश्छेदः खरदूषणनाशनम्। मायामारीचहननं दैत्याद्रामापहारणम्॥ ११
वने विरहिणा भ्रान्तं मनुष्यचरितं धृतम्। कबन्धप्रेक्षणं तत्र पम्पायां गमनं तथा॥ १
हनूमता संगमनमित्येतद्वनसंज्ञितम्। अपरं च शृणु मुने संक्षिप्य कथयाम्यहम्॥ १७
सप्ततालप्रभेदश्च वालेर्मारणमद्भुतम्। सुग्रीवराज्यदानं च नगवर्णनमित्युत॥ १७
लक्ष्मणात्कर्मसंदेशः सुग्रीवस्य विवासनम्। तथा सैन्यसमुद्देशः सीतान्वेषणमप्युत॥ १७
संपातिप्रेक्षणं तत्र वारिधेर्लङ्घनं तथा। परतीरे कपिप्राप्तिः कैष्किन्धं काण्डमद्भुतम्॥ १७
सुन्दरं शृणु काण्डं वै यत्र रामकथाऽद्भुता। प्रतिगेहं परिभ्रान्तिः कपेश्चित्रस्य दर्शनम्॥ १७
सीतासंदर्शनं तत्र जानक्या भाषणं तथा। वनभङ्गः प्रकुपितैर्बन्धनं वानरस्य वै॥ १७
लङ्काप्रज्वलनं तत्र वानरैः संगतिस्ततः। रामाभिज्ञानददनं सैन्यप्रस्थानमेव च॥ १७
समुद्रे सेतुकरणं शुकसारणसंगतिः। इति सुन्दरमाख्यातं युद्धे सीतासमागमः॥ १८
उत्तरे त्वृषिसंवादो यज्ञप्रारम्भ एव च। तत्रानेका रामकथाः शृण्वतां पापनाशकाः॥ १८
इति षट्काण्डमाख्यातं ब्रह्महत्यापनोदनम्। संक्षेपतो मया तुभ्यमाख्यातं सुमनोहरम्॥ १८
चतुर्विंशतिसाहस्रं षट्काण्डपरिचिह्नितम्। तद्वै रामायणं प्रोक्तं महापातकनाशनम्॥ १८
तच्छ्रुत्वा राघवः प्रीतः पुत्रावाधाय चाऽऽसने। दृढं तौ परिरभ्याथ सीतां सस्मार वल्लभाम् १८

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे रामायणगानं नाम षट्षष्टितमोऽध्यायः॥ ६६॥

आदितः श्लोकानां समष्ट्यङ्काः—१४९६४

---

अथ सप्तषष्टितमोऽध्यायः।

---

शेष उवाच—

अथ सौमित्रिरागत्य जानकीं नतवान्मुहुः। प्रेमगद्गदया शंसन्वाचं रामप्रणोदिताम्॥
सीता समागतं दृष्ट्वा लक्ष्मणं विनयान्वितम्। तन्मुखाद्रामसंदेशं श्रुत्वोवाच विलज्जिता॥

सीतोवाच—

सौमित्रे कथमागच्छे रामत्यक्ता महावने। तिष्ठामि रामं स्मरन्ती वाल्मीकेराश्रमे त्वहम्॥
तस्या मुखोदितं वाक्यं श्रुत्वा सौमित्रिरब्रवीत्। मातः पतिव्रते रामस्त्वामाकारयते मुहुः॥

---

* वाल्मीकिरामायणे सप्त काण्डानि वर्तन्तेऽत्र त्वयोध्याकाण्डं विहाय षट्काण्डानीति परिगणनं कृतम्।

---

१ न. 'ले मुनिकृतपु'। २ न. 'प्रगल्भकः। मा'।

पतिकृतं दोषं नाऽऽनयते हृदि । तस्मादागच्छ हि मया स्थित्वा स्यन्दन उत्तमे ॥ ५
वचनं श्रुत्वा जानकी पतिदेवता । मनोरोषं परित्यज्य तस्थौ सौमित्रिणा रथे ॥ ६
ः सकला नत्वा मुनींश्च निगमोद्धुरान् । रामं स्मरन्ती मनसा रथे स्थित्वाऽगमत्पुरीम् ७
नगरीं प्राप्ता महार्हाभरणान्विता । [*शरयूं सरितं प्राप यत्र रामः स्वयं स्थितः ॥ ८
तीर्थे ललिता लक्ष्मणेन समन्विता । ] रामस्य पादयोर्लग्ना पतिव्रतपरायणा ॥ ९
मागतां दृष्ट्वा जानकीं प्रेमविह्वलाम् । साध्वि त्वया सहेदानीं कुर्वे यज्ञसमापनम् ॥ १०
किं सा नमस्कृत्य तथाऽन्यान्विप्रसत्तमान् । जगाम मातृपदयोः संनतिं कर्तुमुत्सुका ॥ ११
ल्या तामथाऽऽयान्तीं वीरसूं जानकीं प्रियाम् । आशीर्भिरभिसंयुज्य ययौ हर्षमनेकधा॥ १२
यी पादयोर्नम्रां वीक्ष्य वैदेहपुत्रिकाम् । भर्त्रा सह चिरं जीव +सपुत्राऽऽशीरिति व्यधात् ॥
मित्रा स्वपदे नम्रां जानकीं वीक्ष्य पुत्रिणीम् । आशिषं व्यदधात्तस्याः पुत्रपौत्रप्रदायिनीम् १४
नकी सर्वशो नत्वा रामभद्रप्रिया सती । परमं हर्षमापन्ना बभूव किल वाडव ॥ १५
गतां वीक्ष्य पत्नीं रामचन्द्रस्य कुम्भजः । सुवर्णपत्नीं धिक्कृत्वा तामधाद्धर्मचारिणीम् ॥ १६
स्तदा यज्ञमध्ये शुशुभे सीतया सह । तारयाऽनुगतो यद्वच्छशीव स रघूत्तमः ॥ १७
गमकरोत्तत्र काले प्राप्ते मनोरमे । वैदेह्या धर्मचारिण्या सर्वपापापनोदनम् ॥ १८
तया सहितं रामं प्रसक्तं यज्ञकर्मणि । निरीक्ष्य जहृषुस्तत्र कौतुकेन समन्विताः ॥ १९
सिष्ठं प्राह सुमतिं रामस्तत्र क्रतौ वरे । किं कर्तव्यं मया स्वामिन्नतः परमवश्यकम् ॥ २०
मस्य वचनं श्रुत्वा गुरुः प्राह महामतिः । ब्राह्मणानां प्रकर्तव्या पूजा संतोषकारिका ॥ २१
स्तेन क्रतुः सृष्टः पूर्वं संभारसंभृतः । ब्राह्मणास्तत्र वित्ताद्यैस्तोषिता ह्यभवंस्तदा ॥ २२
त्यन्तं वित्तसंभारं नेतुं विप्रा[तम]शकन्न हि । प्राक्षिपन्हिमवद्देशे वित्तभारासहा द्विजाः ॥ २३
मात्त्वमपि राजाग्र्यो लक्ष्मीवान्नृपसत्तम । देहि दानादि विप्रेभ्यो यथा स्यात्प्रीतिरुत्तमा॥ २४
च्छ्रुत्वा स राजाग्र्यः पूज्यं मत्वा घटोद्भवम् । प्रथमं पूजयामास ब्रह्मपुत्रं तपोनिधिम् ॥ २५
नेकरत्नसंभारैः स्वर्णभारैरनेकधा । देशैर्जनैः परिपूर्णैरत्यन्तं प्रीतिदायकैः ॥ २६
गस्त्यं पूजयामास सपत्नीकं मनोरमम् । तथैव रत्नैः स्वर्णैश्च देशैश्च विविधैरपि ॥ २७
ासं सत्यवतीपुत्रं तथैव समपूजयत् । च्यवनं भार्यया साकं सुरत्नैः समपूजयत् ॥ २८
न्यानपि मुनीन्सर्वानृत्विजस्तपसां निधीन् । पूजयामास रत्नाद्यैः स्वर्णभारैरनेकधा ॥ २९
दात्तदा क्रतौ रामो विप्रेभ्यो भूरिदक्षिणाम् । [†लक्षं लक्षं सुवर्णस्य प्रत्येकं त्वग्रजन्मने] ३०
नान्धकृपणेभ्यश्च ददौ दानमनेकधा । यथासंतोषविहितैर्वित्तै रत्नैर्मनोहरैः ॥ ३१
सांसि च विचित्राणि भोजनानि मृदूनि च । तत्र प्रादाद्यथाशास्त्रं सर्वेषां प्रीतिकारकम् ॥ ३२
हृष्टपुष्टजनाकीर्णं सर्वसत्त्वोपबृंहितम् । अत्यन्तमभवद्धृष्टं पुरं पुंस्त्रीसमावृतम् ॥ ३३
नं ददतं सर्वेषां वीक्ष्य कुम्भोद्भवो मुनिः । अत्यन्तं परमप्रीतिं ययौ क्रतुवरे द्विजः ॥ ३४
दा क्षालनतोयार्थं पानीयममृतोपमम् । आनेतुं च चतुःषष्टिनृपान्सस्त्रीन्समाह्वयत् ॥ ३५

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. झ. ठ. ड. ण त. थ. ध. पुस्तकस्थः । + सपुत्रेत्याशिषमिति तु
म् । † एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. त. द. ध. न. पुस्तकस्थः ।

१ द. न. °म् । सीता ताः स° । २ ख. ग. छ. ज. ठ. ड. त. थ. भ. न. °था स्वान्तं स° । ३ ख. घ. ङ. झ. ट.
ण. °वद्वृद्धं पु° । ४ न. °मादिशत् ।

रामस्तु सीतया साकमानेतुमुदकं ययौ । घटेन स्वर्णवर्णेन सर्वालंकारशोभया ॥
सौमित्रिरूर्मिलया च माण्डव्या भरतो नृपः । [*शत्रुघ्नः श्रुतकीर्त्या च कान्तिमत्या च पुष्
सुबाहुः सत्यवत्या च सत्यवान्वीरभूषया । सुमदस्तत्र सत्कीर्त्या राज्ञ्या च विमलो नृपः]।
राजा वीरमणिस्तत्र श्रुतवत्या मनोज्ञया । लक्ष्मीनिधिः कोमलया रिपुतापोऽङ्गसेनया ॥
बिभीषणो महामूर्त्या प्रतापाढ्यः प्रतीतया । उग्राश्वः कामगमया नीलरत्नोऽधिरम्यया ॥
सुरथः सुमनोहार्या तथा मोहनया कपिः । इत्यादिनृपतीन्विप्रो वसिष्ठः प्राहिणोन्मुनिः ॥
वसिष्ठः शरयूं गत्वा शिवपुण्यजलाप्लुताम् । उदकं मन्त्रयामास वेदमन्त्रेण मन्त्रवित् ॥
पयः पुनीतमुं वाहमुदकेन मनोहृता । यज्ञार्थं रामचन्द्रस्य सर्वलोकैकरक्षितुः ॥
उदकं तन्मुनिस्पृष्टं सर्वे रामादयो नृपाः । आजह्रुर्मण्डपतले विप्रवर्यैरुपस्कृते ॥
पयोभिर्निर्मलैः स्नाप्य वाजिनं क्षीरसंनिभम् । मन्त्रेण मन्त्रयामास रामहस्तेन कुम्भजः ॥
पुनीहि मां महावाह अस्मिन्ब्रह्मसमाकुले । त्वन्मेधेनाखिला देवाः प्रीणन्तु परितोषिताः ॥
इत्युक्त्वा स नृपो रामः सीतया सममस्पृशत् । तदा सर्वे द्विजाश्चित्रममन्यन्त कुतूहलात् ॥
परस्परमवोचंस्ते यन्नामस्मरणान्नराः । महापापात्प्रमुच्यन्ते स रामः किं वदत्यहो ॥
इत्युक्तवति भूमीशे रामे कुम्भोद्भवो मुनिः । करवालं चाभिमन्त्र्य ददौ रामकरे मुनिः ॥
करवाले धृते स्पृष्टे रामेण स हयः क्रतौ । पशुत्वं तु विहायाऽऽशु दिव्यरूपमपद्यत ॥
विमानवरमारूढश्चाप्सरोभिः समन्वितः । चामरैर्वीज्यमानश्च वैजयन्त्या विभूषितः ॥
तदा तं वाजितां त्यक्त्वा दिव्यरूपधरं नरम् । वीक्ष्य लोकाः क्रतौ सर्वे विस्मयं प्रापुर्वस्तदा
तदा रामः स्वयं जानञ्ज्ञापयन्सर्वतो नरान् । पप्रच्छ दिव्यरूपस्थं सुरं परमधार्मिकः ॥

श्रीराम उवाच—

कस्त्वं दिव्यवपुः प्राप्तः कस्मात्त्वं वाजितां गतः । कथं सुरस्त्रीसहितः किं चिकीर्षसि तद्वद
रामस्य वचनं श्रुत्वा देवः प्रोवाच भूमिपम् । हसन्मेघरवां वाणीमवदत्सुमनोहराम् ॥

देव उवाच—

तवाज्ञातं न सर्वत्र बाह्याभ्यन्तरचारिणः । तथाऽपि पृच्छते तुभ्यं कथयामि यथातथम् ॥
अहं पुराभवे राम द्विजः परमधार्मिकः । चचार प्रतिकूलं तु देवस्य रिपुतापन ॥
कदाचिद्धूतपापायास्तीरेऽहं गतवान्पुरा । अनेकवृक्षललिते सर्वत्र सुमनोरमे ॥
तत्र स्नात्वा पितॄंस्तृप्त्वा दानं दत्त्वा यथाविधि । ध्यानं तव महाबाहो कृतवान्वेदसंमितम् ॥
[†तदा जनाः समायाता बहवस्तत्र भूपते । तेषां प्रवञ्चनार्थाय दम्भमेनमकारिषम् ॥
अनेकक्रतुसंभारैः पूर्णमजिरमुत्तमम्] । वासोभिश्छादितं रम्यं चषालादियुतं महत् ॥
अग्निहोत्रोद्भवो धूमः सर्वतो नभसोऽङ्गणम् । चकार रम्यमतुलं चित्रकारिवपुर्धरः ॥
अनेकतिलकश्रीभिः शोभिताङ्गो महातपाः । दर्भशोभी समित्पाणिर्दम्भो मूर्तिधरः किमु ॥
दुर्वासास्तत्र स्वच्छदं पर्यटञ्जगतीतलम् । प्राप तत्र महातेजा धूतपापः सरित्तटे ॥
ददर्श मां दम्भकरं मौनधारणमग्रतः । अनर्घ्यकरमुन्मत्तमस्वागतवचःकरम् ॥

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. न. पुस्तकस्थः । + आर्षत्वात्साधु ।

१ ज. 'व अहमहो' । ध. 'व महोत्साहं कृ' । २ न. 'हावादान्वेदवादसमन्वितान् । त' ।

तीव्रक्षुधाऽऽक्रान्तः समुद्र इव पर्वणि । शशापासौ मुनिस्तीव्रो दम्भिनं मां महामतिः ६६
दुर्वासा उवाच—
त्वं शरयुतीरे करोषि दम्भमुग्रकम् । तस्मात्प्राप्नुहि निर्वाच्यं पशुत्वं तापसाधम ॥ ६७
प्रदत्तं संश्रुत्य दुःखितोऽहं तदाऽभवम् । अग्रहीषं पदे तस्य मुनेर्दुर्वाससः किल ॥ ६८
मे कृतवान्राम द्विजोऽनुग्रहमुत्तमम् । वाजितां प्राप्नुहि मखे राजराजस्य तापस ॥ ६९
त्वद्धस्तसंपर्काद्याहि तत्परमं पदम् । दिव्यं वपुर्मनोहारि धृत्वा दम्भविवर्जितम् ॥ ७०
शापोऽपि संदिष्टो ममानुग्रहतां गतः । यदहं तव हस्तस्य स्पर्शं प्राप्तो मनोरमम् ॥ ७१
(य ए)व राम देवादिदुर्लभं बहुजन्मभिः । तत्तेऽ(तं तेऽ)हं करजस्पर्शं प्राप्तवानतिदुर्लभम् ॥ ७२
ज्ञापय महाराज त्वत्प्रसादादहं महत् । गच्छामि शाश्वतं स्थानं तव दुःखादिवर्जितम् ॥ ७३
यत्र शोको न जरा न मृत्युः कालविभ्रमः । तत्स्थानं देव गच्छामि त्वत्प्रसादान्नराधिप ७४
युक्त्वा तं परिक्रम्य विमानवरमारुहत् । अनेकरत्नरचितं सर्वदेवाधिवन्दितम् ॥ ७५
ोऽसौ शाश्वतं स्थानं रामपादप्रसादतः । पुनरावृत्तिरहितं शोकमोहविवर्जितम् ॥ ७६
तत्कथितं श्रुत्वा रामं ज्ञात्वेतरे जनाः । विस्मयं प्रापिरे सर्वे परस्परमुदुन्मदाः ॥ ७७
णु द्विज महाबुद्धे दम्भेनापि स्मृतो हरिः । ददाति मोक्षं सुतरां किं पुनर्दम्भवर्जनात् ॥ ७८
थाकथंचिद्रामस्य कर्तव्यं स्मरणं परम् । येन प्राप्नोति परमं पदं देवादिदुर्लभम् ॥ ७९
चित्रं वीक्ष्य मुनयः कृतार्थं मेनिरे निजम् । यद्रामचरणप्रेक्षाकरस्पर्शपवित्रितम् ॥ ८०
ते तस्मिन्सुरे स्वर्गे हयरूपधरे पुरा । उवाच रामस्तपसां निधीन्वेदविदुत्तमान् ॥ ८१
श्रीराम उवाच—
किं कर्तव्यं मया ब्रह्मन्हयो नष्टो गतः सुखम् । होमः कथं पुरो भावी सर्वदैवततर्पकः ॥ ८२
था स्यात्सुरसंतृप्तिर्यथा मे मख उत्तमः । तथा कुर्वन्तु मुनयो यथा मे स्याद्विधिश्रुतम् ॥ ८३
ति वाक्यं समाश्रुत्य जगाद मुनिसत्तमः । वसिष्ठः सर्वदेवानां चित्ताभिज्ञानकोविदः ॥ ८४
र्पूरमाहर क्षिप्रं येन देवाः स्वयं पुरः । प्राप्य हव्यं ग्रहीष्यन्ति मद्वाक्यप्रेरिताधुना* ॥ ८५
ति वाक्यं समाकर्ण्य रामः क्षिप्रमुपाहरत् । कर्पूरं बहु देवानां प्रीत्यर्थं बहुशोभनम् ॥ ८६
दा मुनिः महष्टात्मा देवानाह्वयदद्भुतान् । ते सर्वे तत्क्षणात्प्राप्ताः स्वपरीवारसंवृताः ॥ ८७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे यज्ञप्रारम्भवर्णनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५०५१

अथाष्टषष्टितमोऽध्यायः ।

शेष उवाच—
न्द्रस्तत्र हविर्मृष्टं रामचन्द्रेण वीक्षितम् । परिस्वादन्क्रतौ तृप्तिं न प्राप सुरसंयुतः ॥ १
ारायणो महादेवो ब्रह्मा तत्र चतुर्मुखः । वरुणश्च कुबेरश्च तथाऽन्ये लोकपालकाः ॥ २

* संधिरार्षः ।

१ द. न. 'दृष्ट्वा तीव कु' । २ क. ख. ग. च. छ. झ. ठ. ड. ण. त. थ. द. ध. न. 'वानिह दु' । ३ म 'क्षापुरुषं मैयस्त्रितम्' । ४ क च. ज. ञ. ड. ण. ध 'रिखाद' ।

तत्राऽऽस्वाद्य हविः स्निग्धं वसिष्ठेन परिष्कृतम् । तत्र पुनर्हि विप्रेन्द्राः क्षुधार्ता इव भोजन
सर्वान्देवांश्च संतर्प्य हविषा करुणानिधिः । वसिष्ठप्रेरितः सर्वमितिकर्तव्यमाचरत् ॥
ब्राह्मणा दानसंतुष्टा हविस्तुष्टाः सुरा वराः । तृप्ताः सर्वे स्वकं भागं गृहीत्वा निलयं ययुः
ऋषिभ्यो होतृमुख्येभ्यः प्रादाद्राज्यं चतुर्दिशम् । संतुष्टास्ते द्विजा राममाशीर्भिरददुः शुभः
पूर्णाहुतिं ततः कृत्वा वसिष्ठः प्राह सुस्त्रियः । वर्धापयन्तु भूमीशं यज्ञपूर्तिकरं परम् ॥
तद्वाक्यं ताः स्त्रियः श्रुत्वा लाजैरवाकिरन्मुदा । लावण्यजितकन्दर्पं महाभूमीशपूजितम् ॥
ततोऽवभृथस्नानार्थं प्रेरयामास भूमिपम् । ययौ रामः सह स्वीयैः शरयूतीरमुत्तमम् ॥
अनेकराजकोटीभिः परितः पादचारिभिः । जगाम स सरिच्छ्रेष्ठां पक्षिवृन्दसमाकुलाम् ॥
तारापतिरिव स्वाभिर्भार्याभिर्वृत उत्प्रभः । विरोचते यथा तद्वद्रामो राजगणैर्वृतः ॥
तदुत्सवं समाज्ञाय ययुर्लोकास्त्वरायुताः । सीतापतिमुखालोकनिश्चलीभूतलोचनाः ॥
राजेन्द्रं सीतया साकं गच्छन्तं सरितं प्रति । विलोक्य मुदिता लोकाश्चिरं दर्शनलालसाः
अनेकनटगन्धर्वा गायन्तो यश उज्ज्वलम् । अनुजग्मुर्महीशानं सर्वलोकनमस्कृतम् ॥
नर्तक्यस्तत्र नृत्यन्त्यः क्षोभयन्त्यः पतेर्मनः । जलयन्त्रैश्च सिञ्चन्त्यो ययुः श्रीरामसेवनम् ।
महाराजं विलिम्पन्त्यो हरिद्राकुङ्कुमादिभिः । परस्परं विलिम्पन्त्यो मुदं प्रापुर्महत्तराम् ॥
कुचयुग्मोपरिन्यस्तमुक्ताहारसुशोभिताः । श्रवणद्वंद्वसंमृष्टस्वर्णकुण्डललक्षिताः ॥
अनेकनरनारीभिः संकीर्णं मार्गमाचरत् । यथावत्सरितं प्राप शिवपुण्यजलाप्लुताम् ॥
तत्र गत्वा स वैदेह्या रामः कमललोचनः । प्रविवेश जलं पुण्यं वसिष्ठादिभिरन्वितः ॥
अनुप्रविविशुः सर्वे राजानो जनतास्तथा । तत्पादरजसा पूतं जलं लोकैकवन्दितम् ॥
परस्परं प्रसिञ्चन्तो जलयन्त्रैर्मनोरमैः । सुशोणनयनाः सर्वे हर्षं प्रापुर्मनोधिकम् ॥
स रामः सीतया सार्धं चिरं पुण्यजलप्लुवे । क्रीडित्वा जलकल्लोलैर्निरगाद्धर्मसंयुतः ॥

दुकूलवासाः सकिरीटकुण्डलः केयूरशोभावरकङ्कणान्वितः ।
कंदर्पकोटिश्रियमुद्वहन्नृपो राजाऽध्यवर्यैरुपसंस्तुतो बभौ ॥
स यागयूपं वरवर्णशोभितं कृत्वा सरित्तीरवरे महामनाः ।
त्रैलोक्यलोकश्रियमाप ह्यद्भुतामन्यैर्दुरापां नृपतिर्भुजैर्वरैः ॥

एवं जनकपुत्र्याऽसौ हयमेधत्रयं चरन् । त्रैलोक्ये कीर्तिमतुलां प्रपेदे वै सुदुर्लभाम् ॥
एवं ते वर्णितं तात यत्पृष्टो रामसत्कथाम् । विस्तृतः कथितो मेधो भूयः किं पृच्छसि द्विज
यः शृणोति हरेर्भक्त्या रामचन्द्रस्य सन्मखम् । ब्रह्महत्यां क्षणात्तीर्त्वा ब्रह्मशाश्वतमाप्नुयात्
अपुत्रो लभते पुत्रान्निर्धनो धनमाप्नुयात् । रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥
यत्कथाश्रवणाद्दुष्टः श्वपचोऽपि परं पदम् । प्राप्नोति किमु विप्राग्र्यो रामभक्तिपरायणः ॥
रामं स्मृत्वा महाभागं पापिनोऽपि परं पदम् । प्राप्नुयुः परमं स्वर्गं शक्रदेवादिदुर्लभम् ॥
ते धन्या मानवा लोके ये स्मरन्ति रघूद्वहम् । ते क्षणात्संसृतिं तीर्त्वा गच्छन्ति सुखमव्ययम्
प्रत्येकमक्षरं ब्रह्महत्यावंशदवानलः । तं यः श्रावयते धीमांस्तं गुरुं संप्रपूजयेत् ॥
श्रुत्वा कथां वाचकाय गवां द्वंद्वं प्रदापयेत् । सपत्नीकाय संपूज्य वस्त्रालंकारभोजनैः ॥

१ द. न. 'हामणिविभूषित' । २ भ. 'रकुङ्कुमान्वि' । ३ क. ख. च. छ. झ. ढ, ण. त. थ. द. न. 'जैर्निजैः । ए

लाभ्यां विराजन्त्यौ मुद्रिकाभिरलंकृते । रामसीते स्वर्णमय्यौ प्रतिमे शोभने वरे ॥ ३४
ा तु वाचकायैव दीयेते हि द्विजोत्तम । तस्य देवाश्च पितरो वैकुण्ठं प्राप्नुयुस्तदा ॥ ३५
ा पृष्टा रामकथा मया ते कथिता पुरा । किमन्यत्कथ्यतां ब्रह्मन्पुरतस्तत्र धीमतः ॥ ३६
वन्ति ये कथामेतां ब्रह्महत्यौघनाशिनीम् । ते यान्ति परमं स्थानं सर्वदेवैः सुदुर्लभम् ॥ ३७
घ्नश्च तु सुतघ्नश्च सुरापो गुरुतल्पगः । क्षणात्पूतो भवत्येवमचिरेण द्विजर्षभ ॥ ३८

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधवर्णनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५०८९

---

अथैकोनसप्ततितमोऽध्यायः ।

---

ऋषय ऊचुः—

ष्यद्भुतो महाराज त्वत्तो रामाश्वमेधकः । इदानीं वद माहात्म्यं श्रीकृष्णस्य महात्मनः ॥ १

सूत उवाच—

वन्तु मुनिशार्दूलाः श्रीकृष्णचरितामृतम् । शिवा पप्रच्छ भूतेशं यत्तद्वः कीर्तयाम्यहम् ॥ २
कदा पार्वती देवी शिवसंस्निग्धमानसा । प्रणयेन नमस्कृत्य प्रोवाच वचनं त्विदम् ॥ ३

पार्वत्युवाच—

नन्तकोटिब्रह्माण्डे तद्बाह्याभ्यन्तरस्थिते । विष्णोः स्थानं परं तेषां प्रधानं वरमुत्तमम् ॥ ४
त्परं नास्ति कृष्णस्य प्रियं स्थानं मनोरमम् । तत्सर्वं श्रोतुमिच्छामि कथयस्व महाप्रभो ॥ ५

ईश्वर उवाच—

गुह्याद्गुह्यतरं पुण्यं परमानन्दकारकम् । अत्यद्भुतं रहःस्थानं रहस्यं परमं पदम् ॥ ६
लभानां च परमं दुर्लभं मोहनं परम् । सर्वशक्तमिदं देवि सर्वस्थानेषु गोपितम् ॥ ७
त्वतां स्थानमूर्धन्यं विष्णोरत्यन्तदुर्लभम् । नित्यं वृन्दावनं नाम ब्रह्माण्डोपरि संस्थितम् ॥ ८
पूर्णब्रह्मसुखैश्वर्यं नित्यमानन्दमव्ययम् । वैकुण्ठादि तदंशांशं स्वयं वृन्दावनं भुवि ॥ ९
गोलोकैश्वर्यं यत्किंचिद्गोकुलं तत्प्रतिष्ठति । वैकुण्ठवैभवं यद्वै द्वारकायां प्रकाशितम् ॥ १०
ब्रह्मपरमैश्वर्यं नित्यं वृन्दावनाश्रयम् । कृष्णधाम परं तेषां वनमध्ये विशेषतः ॥ ११
स्मात्त्रैलोक्यमध्ये तु पृथ्वी धन्येति विश्रुता । यस्मान्माथुरकं नाम विष्णोरेकान्तवल्लभम् ॥ १२
स्वस्थानमधिकं नाम ध्येयं माथुरमण्डलम् । निगूढं विविधं स्थानं पुर्यभ्यन्तरसंस्थितम् ॥ १३
सहस्रपत्रकमलाकारं माथुरमण्डलम् । विष्णुचक्रपरिभ्रमणं धाम वैष्णवमद्भुतम् ॥ १४
कर्णिकापर्णविस्तारं रहस्यं द्रुममीरितम् । प्रधानं द्वादशारण्यं माहात्म्यं कथितं क्रमात् ॥ १५
भद्रश्रीलोहभाण्डीरमहातालखदीरकाः (?) । बकुलं कुमुदं काम्यं मधु वृन्दावनं तथा ॥ १६
[*द्वादशैतावती संख्या कालिन्द्याः सप्त पश्चिमे । पूर्वे पञ्चवनं प्रोक्तं तत्रास्ति गुह्यमुत्तमम् ॥ १७
महारण्यं गोकुलाख्यं मधु वृन्दावनं तथा ] । अन्यच्चोपवनं प्रोक्तं कृष्णक्रीडारसस्थलम् ॥ १८

---

* एतच्चिह्नान्तर्गतः पाठः ख. ङ. पुस्तकस्थः ।

---

१ ङ. न. °व नात्र संशयितुं क्षमम् । ई° । २ म. °कुण्ठादिभवं यद्वद्वा° । ३ ङ. °नं पूर्य° । म. °नं पुर्याभ्य° ४ ङ. म. °रिभ्रामाद्धाम । ५ ङ. °कापूरवि° । म. °कापूर्ण° । ६ ङ. म. °लकदी° ।

कदम्बखण्डकं नन्दं वनं नदी(न्दी)श्वरं तथा । नन्दनं वनखण्डं च पलाशाशोककेतकी ॥ १
सुगन्धमानकंकैलममृतं भोजनस्थलम् । सुखप्रसाधनं वत्सहरणं शेषशायिकम् ॥
श्यामपुर्योदधिग्रामश्चक्रभानुपुरं तथा । शं(सं)केतं द्विपदं चैव बालक्रीडनधूसरम् ॥
केलिद्रुमं[2] सुललितमुत्सुकं चापि काननम् । नानाविधरसक्रीडानानालीलारसस्थलम् ॥ २
नगविस्तारविष्टम्भं रहस्यं द्रुममीरितम् । सहस्रपत्रकमलं गोकुलाख्यं महत्पदम् ॥ २
कर्णिका तन्महद्धाम गोविन्दस्थानमुत्तमम् । तत्रोपरि स्वर्णपीठे मणिमण्डपमण्डितम् ॥ २१
कर्णिकायां क्रमाद्दिक्षु विदिक्षु दलमीरितम् । यद्दलं दक्षिणे प्रोक्तं परं गुह्योत्तमोत्तमम् ॥ २५
तस्मिन्दले महापीठं निगमागमदुर्गमम् । योगीन्द्रैरपि दुष्प्राप्यं सर्वात्मा यत्र गोकुलम् ॥ २६
द्वितीयं दलमाग्नेय्यां तद्रहस्यं दलं तथा । संकेतं द्विपदं चैव कुटी द्वौ तद्दले स्थितौ(?) ॥ २७
पूर्वे दलं तृतीयं यत्प्रधानस्थानमुत्तमम् । गङ्गादिसर्वतीर्थेभ्यः स्पर्शाच्छतगुणं स्मृतम् ॥ २८
चतुर्थं दलमैशान्यां सिद्धिपीठे तु तत्पदम् । कात्यायन्यर्चनाद्गोपी तत्र कृष्णं पतिं लभेत् ॥ २९
वस्त्रालंकारहरणं तद्दले समुदाहृतम् । उत्तरे पञ्चमं प्रोक्तं दलं सर्वदलोत्तमम् ॥ ३०
द्वादशादित्यमत्रैव दलं च कर्णिकासमम् । वायव्यां तु दलं षष्ठं तत्र कालीह्रदः स्मृतः ॥ ३१
दलोत्तमोत्तमं चैव प्रधानं स्थानमुच्यते । सर्वोत्तमदलं चैव पश्चिमे सप्तमं स्मृतम् ॥ ३२
यज्ञपत्नीगणानां च तदीप्सितवरप्रदम् । अत्रासुरोऽपि निर्वाणं प्राप त्रिदशदुर्लभम् ॥ ३३
ब्रह्ममोहनमत्रैव दलं ब्रह्महृदाभिधम् । नैर्ऋत्यां तु दलं प्रोक्तमष्टमं व्योमघातनम् ॥ ३४
शङ्खचूडवधस्तत्र नानाकेलिरसस्थलम् । श्रुतमष्टदलं प्रोक्तं वृन्दारण्यान्तरास्थितम् ॥ ३५
श्रीमद्वृन्दावनं रम्यं यमुनायाः प्रदक्षिणम् । शिवलिङ्गमधिष्ठानं दृष्टं गोपीश्वराभिधम् ॥ ३६
तद्बाह्ये षोडशदलं श्रिया पूर्णं तमीश्वरम् । सर्वासु दिक्षु यत्प्रोक्तं प्रादक्षिण्याद्यथाक्रमम् ॥ ३७
महत्पदं महद्धाम स्वधामाधावसंज्ञकम् । प्रथमैकदलं श्रेष्ठं माहात्म्यं कर्णिकासमम्(?) ॥ ३८
तत्र गोवर्धनगिरौ रम्ये नित्यरसाश्रये । कर्णिकायां महालीलातल्लीलारसगह्वरौ ॥ ३९
यत्र कृष्णो नित्यवृन्दाकाननस्य पतिर्भवेत् । कृष्णो गोविन्दतां प्राप्तः किमन्यैर्बहुभाषितैः॥ ४०
दलं तृतीयमाख्यातं सर्वश्रेष्ठोत्तमोत्तमम् । चतुर्थं दलमाख्यातं महाद्भुतरसस्थलम् ॥ ४१
नन्दीश्वरवनं रम्यं तत्र नन्दालयः स्मृतः । कर्णिकादलमाहात्म्यं पञ्चमं दलमुच्यते ॥ ४२
अधिष्ठाताऽत्र गोपालो धेनुपालनतत्परः । दलं षष्ठं यदाख्यातं तत्र नन्दवनं स्मृतम् ॥ ४३
सप्तमं बकुलारण्यं दलं रम्यं प्रकीर्तितम् । तत्राष्टमं तालवनं तत्र धेनुवधः स्मृतः ॥ ४४
नवमं कुमुदारण्यं दलं रम्यं प्रकीर्तितम् । कामारण्यं च दशमं प्रधानं सर्वकारणम् ॥ ४५
ब्रह्मप्रसादनं तत्र विष्णुच्छद्मप्रदर्शनम् । [*कृष्णक्रीडारसस्थानं प्रधानं दलमुच्यते ॥ ४६
दलमेकादशं प्रोक्तं भक्तानुग्रहकारकम् । निर्माणं सेतुबन्धस्य नानावनमयस्थलम् ] ॥ ४७
भाण्डीरं द्वादशदलं वनं रम्यं मनोहरम् । कृष्णः क्रीडारतस्तत्र श्रीदामादिभिरावृतः ॥ ४८
त्रयोदशं दलं श्रेष्ठं तत्र भद्रवनं स्मृतम् । चतुर्दशदलं प्रोक्तं सर्वसिद्धिप्रदस्थलम् ॥ ४९

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. ञ. ढ. पुस्तकस्थः ।

---

१ ख. °ग्रामो वृषभा° । २ ख. कलिद्रुमं । ३ क. °क्षु सुवर्णद° । ४ ख. °धा । निकुञ्जककुटीवीरकु° । ङ. च. °धा कुञ्जकटुकी वीरकु° । ५ झ. स्वाध्यायाधा° । ञ. स्वाधयाधा° । ६ झ ञ. °काश्रमं° । ७ ख. ङ. °तिर्वसेत् । ८ ङ °ः ।

...तत्र रुचिरं सर्वैश्वर्यस्य कारणम् । कृष्णक्रीडामयदलं श्रीकान्तिकीर्तिवर्धनम् ॥ ५०
... दलं श्रेष्ठं तत्र लोहवनं स्मृतम् । कथितं षोडशदलं माहात्म्यं कर्णिकासमम् ॥ ५१
...तत्र गीतं तत्रास्ति गुह्यमुत्तमम् । बालक्रीडारतस्तत्र वत्सपालैः समावृतः ॥ ५२
...वधस्तत्र यमलार्जुनभञ्जनम् । अधिष्ठाता तु बालस्य गोपालः पञ्चमाब्दिकः ॥ ५३
...दामोदरः प्रोक्तः प्रेमानन्दरसार्णवः । दलं प्रसिद्धमाख्यातं सर्वश्रेष्ठदलोत्तमम् ॥ ५४
...डा च किञ्जल्कीविहारदलमुच्यते । सिद्धप्रधानकिञ्जल्कं दलं च समुदाहृतम् ॥ ५५

पार्वत्युवाच—

...यस्य माहात्म्यं रहस्यं वा किमद्भुतम् । तदहं श्रोतुमिच्छामि कथयस्व महाप्रभो ॥ ५६

ईश्वर उवाच—

...ते प्रियतमं गुह्याद्गुह्योत्तमोत्तमम् । रहस्यानां रहस्यं यद्दुर्लभानां च दुर्लभम् ॥ ५७
...लोक्यगोपितं देवि देवेश्वरसुपूजितम् । ब्रह्मादिवाञ्छितं स्थानं सुरसिद्धादिसेवितम् ॥ ५८
...गीन्द्रादिमुनीन्द्रादि सदा तद्ध्यानतत्परम् । अप्सरोभिश्च गन्धर्वैर्नृत्यगीतनिरन्तरम् ॥ ५९
...मद्वृन्दावनं रम्यं पूर्णानन्दरसाश्रयम् । भूरिचिन्तामणिस्तोयममृतंरसपूरितम् (?) ॥ ६०
... गुरुद्रुमं तत्र सुरभीवृन्दसेवितम् । स्त्रीं लक्ष्मीं पुरुषं विष्णुं तद्दशांशसमुद्भवम् ॥ ६१
... कैशोरवयसं नित्यमानन्दविग्रहम् । गतिनाट्यकथालापं स्मितवक्त्रं निरन्तरम् ॥ ६२
...द्धसत्त्वैः प्रेमपूर्णैर्वैष्णवैस्तद्वनाश्रयम् । पूर्णब्रह्मसुखे मग्नं स्फुरत्तन्मूर्तितन्मयम् ॥ ६३
...कोकिलभृङ्गाद्यैः कूजत्कलमनोहरम् । कपोतशुकसंगीतमुन्मत्तालिसहस्रकम् ॥ ६४
...गशत्रुनृत्याढ्यं सकलामोदविभ्रमम् । नानावर्णैश्च कुसुमैस्तद्रेणुपरिपूरितम् ॥ ६५
...न्दुनित्याभ्युदयं सूर्यमन्दांशुसेवितम् । अदुःखं दुःखविच्छेदं जरामरणवर्जितम् ॥ ६६
...क्रोधं गतमात्सर्यमभिन्नमनहंकृतम् । पूर्णानन्दामृतरसं पूर्णप्रेमसुखार्णवम् ॥ ६७
...तीतं महद्धाम पूर्णप्रेमस्वरूपकम् । यत्र वृक्षादिपुलकैः प्रेमानन्दाश्रु वर्षितम् ॥ ६८
... पुनश्चेतनायुक्तैर्विष्णुभक्तैः किमुच्यते । गोविन्दाङ्घ्रिरजःस्पर्शान्नित्यवृन्दावनं भुवि ॥ ६९
...स्रदलपद्मस्य वृन्दारण्यं वराटकम् । यस्य स्पर्शनमात्रेण पृथ्वी धन्या जगत्त्रये ॥ ७०
...द्गुह्यतमं रम्यं मध्यं वृन्दावनं भुवि । अक्षरं परमानन्दं गोविन्दस्थानमव्ययम् ॥ ७१
...विन्ददेहतोऽभिन्नं पूर्णब्रह्मसुखाश्रयम् । मुक्तिस्तत्र रजःस्पर्शात्तन्माहात्म्यं किमुच्यते ॥ ७२
...त्सर्वात्मना देवि हृदिस्थं तद्वनं कुरु । वृन्दावनविहारेषु कृष्णं कैशोरविग्रहम् ॥ ७३
...लिन्दी चाकरोदस्य कर्णिकायाः प्रदक्षिणम् । लीलानिर्वाणगम्भीरं जलं सौरभमोहनम् ७४
...नन्दामृततन्मि(संमि)श्रमकरन्दघनालयम् । पद्मोत्पलाद्यैः कुसुमैर्नानावर्णसमुज्ज्वलम् ॥ ७५
...वाकादिविहगैर्मञ्जुनानाकलस्वनैः । शोभमानं जलं रम्यं तरङ्गातिमनोहरम् ॥ ७६
...भयतटी रम्या शुद्धकाञ्चननिर्मिता । गङ्गाकोटिगुणः प्रोक्तो यत्र स्पर्शवराटकः ॥ ७७
...कायां कोटिगुणो यत्र क्रीडारतो हरिः । कालिन्दीकर्णिकां कृष्णमभिन्नमेकविग्रहम् ॥ ७८

पार्वत्युवाच—

...न्दस्य किमाश्चर्यं सौन्दर्याकृतिविग्रह । तदहं श्रोतुमिच्छामि कथयस्व दयानिधे ॥ ७९

१ अ. °मणिस्तो° । २ ख अपरं । क. अक्षय्यं । ३ अ. रम्यां । ४ झ. अ. °र्मिताम् । ग° । ५ झ. °तिकद्वयः । त° ।

ईश्वर उवाच—

मध्ये वृन्दावने रम्ये मञ्जुमञ्जीरशोभिते । योजनाश्रिततद्वृक्षे शाखापल्लवमण्डिते ॥
तन्मध्ये मञ्जुभवने योगपीठं समुज्ज्वलम् । तदष्टकोणनिर्माणं नानादीप्तिमनोहरम् ॥
तस्योपरि च माणिक्यरत्नसिंहासनं शुभम् । तस्मिन्नष्टदलं पद्मं कर्णिकायां सुखाश्रयम् ॥
गोविन्दस्य परं स्थानं किमस्य महिमोच्यते । श्रीमद्गोविन्दमन्त्रस्थं वैष्णववृन्दसेवितम् ॥ ८
दिव्यव्रजवयोरूपं कृष्णं वृन्दावनेश्वरम् । व्रजेन्द्रं संततैश्वर्यं व्रजबालैकवल्लभम् ॥ ८
यौवनोद्भिन्नकैशोरं वयसाऽद्भुतविग्रहम् । अनादिमादिं सर्वेषां नन्दगोपप्रियात्मजम् ॥ ८
श्रुतिमृग्यमजं नित्यं गोपीजनमनोहरम् । [*परं धाम परं रूपं द्विभुजं गोकुलेश्वरम् ॥ ८६
बल्लवीनन्दनं ध्यायेन्निर्गुणस्यैककारणम् । सुश्रीमन्तं नवं स्वच्छं श्यामधाममनोहरम् ॥ ८७
नवीननीरदश्रेणीसुस्निग्धमञ्जुकुण्डलम् । फुल्लेन्दीवरसत्कान्तिसुखस्पर्शं सुखावहम् ॥ ८८
दलिताञ्जनकुञ्जाभचिक्कणं श्याममोहनम् । सुस्निग्धनीलकुटिलाशेषसौरभकुन्तलम् ॥ ८९
तदूर्ध्वं दक्षिणे भाले श्यामचूडामनोहरम् ] । नानावर्णोज्ज्वलं राजच्छिखण्डिदलमण्डितम् ॥९०
मन्दारमञ्जुगोपुच्छचूडं चारुविभूषितम् । क्वचिद्बर्हदलश्रेणिमुकुटेनाभिमण्डितम् ॥ ९१
अनेकमणिमाणिक्यकिरीटभूषणं क्वचित् । लोलालकवृतं राजत्कोटीन्दुसदृशाननम् ॥ ९२
कस्तूरीतिलकं भ्राजन्मञ्जुगोरोचनान्वितम् । नीलेन्दीवरसुस्निग्धं सुदीर्घदललोचनम् ॥ ९३
आनृत्यद्भ्रूलताश्लेषस्मितं साचिनिरीक्षणम् । सुचारुभूतसौन्दर्यनासाग्रातिमनोहरम् ॥ ९४
नासाग्रगजमुक्तांशुमुग्धीकृतजगत्त्रयम् । सिन्दूरारुणसुस्निग्धाधरौष्ठसुमनोहरम् ॥ ९५
नानावर्णोल्लसत्स्वर्णमकराकृतिकुण्डलम् । तद्रश्मिमञ्जुसद्गण्डमुकुराभसमद्युतिम् ॥ ९६
कर्णोत्पलसुमन्दारमकरोत्तंसभूषितम् । श्रीवत्सकौस्तुभोरस्कं मुक्ताहारस्फुरद्गलम् ॥ ९७
विलसद्दिव्यमाणिक्यमञ्जुकाञ्चनमिश्रितम् । करकङ्कणकेयूरकिङ्किणीकटशोभितम् ॥ ९८
मञ्जुमञ्जीरसौन्दर्यश्रीमदङ्घ्रिविराजितम् । कर्पूरागरुकस्तूरीविलसच्चन्दनादिकम् ॥ ९९
गोरोचनादिसंमिश्रदिव्याङ्गरागचित्रितम् । स्निग्धपीतपटीराजत्प्रपदान्दोलिताञ्जनम् ॥ १००
गम्भीरनाभिकमलं रोमराजीनतस्रजम् । सुवृत्तजानुयुगलं पादपद्ममनोहरम् ॥ १०१
ध्वजवज्राङ्कुशाम्भोजकराङ्घ्रितलशोभितम् । नखेन्दुकिरणश्रेणीपूर्णं ब्रह्मैककारणम् ॥ १०२
केचिद्वदन्ति तस्यांशं ब्रह्म चिद्रूपमव्ययम् । तदंशांशं महाविष्णुं प्रवदन्ति मनीषिणः ॥ १०३
योगीन्द्रैः सनकाद्यैश्च तदेव हृदि चिन्त्यते । त्रिभङ्गं ललिताशेषनिर्माणसारनिर्मितम् ॥ १०४
तिर्यग्ग्रीवजितानन्तकोटिकंदर्पसुन्दरम् । वामांसार्पितसद्गण्डं स्फुरत्काञ्चनकुण्डलम् ॥ १०५
सापाङ्गेक्षणसस्मेरकोटिमन्मथसुन्दरम् । कुञ्चिताधरविन्यस्तवंशीमञ्जुकलस्वनैः ॥ १०६
जगत्त्रयं मोहयन्तं मग्नं प्रेमसुधार्णवे ॥ १०

पार्वत्युवाच—

परमं कारणं कृष्णं गोविन्दाख्यं [+महत्पदम् । वृन्दावनेश्वरं नित्यं निर्गुणस्यैककारणम् ॥ १०

* एतच्चिह्नान्तर्गतः पाठः ख. ङ. च. ड. पुस्तकस्थः । † ख. ङ. व्यतिरिक्तपुस्तकेषु घटीति पाठो दृश्यते । + ए
चिह्नान्तर्गतः पाठः क. ख. ङ. च. ञ. ड. पुस्तकस्थः ।

१ ञ. °मन्त्रस्थं । २ झ. ञ. °ष्णवीवृ° । ३ क. ख. ङ. च ञ. ढ. °चारुमत° । ४ झ. ञ. °त्पलं मु° । ५ झ.
क° । ६ ञ. °भङ्ल° ।

[...]स्यमाहात्म्यं किमैश्वर्यं च सुन्दरम् । तद्ब्रूहि देवदेवेश श्रोतुमिच्छाम्य]हं प्रभो ॥ १०९
ईश्वर उवाच—
[...]घ्रिनखचन्द्रांशुमहिमान्तो न विद्यते । तन्माहात्म्यं कियद्देवि प्रोच्यते त्वं मुदा शृणु ॥ ११०
[...]तकोटिब्रह्माण्डे अनन्तत्रिगुणोच्छ्रये । तत्कलाकोटिकोट्यंशा ब्रह्मविष्णुमहेश्वराः ॥ १११
[...]स्थित्यादिना युक्तास्तिष्ठन्ति तस्य वैभवाः । तद्रूपकोटिकोट्यंशाः कलाः कंदर्पविग्रहाः ११२
[...]मोहं प्रकुर्वन्ति तदण्डान्तरसंस्थिताः । तद्देहविलसत्कान्तिकोटिकोट्यंशको [1]विभुः ॥ ११३
[...]काशस्य कोट्यंशरश्मयो रविविग्रहाः । तस्य स्वदेहकिरणैः परानन्दरसामृतैः ॥ ११४
[...]मामोदचिद्रूपैर्निर्गुणस्यैककारणैः । तदंशकोटिकोट्यंशा जीवन्ति किरणात्मकाः ॥ ११५
[...]ङ्घ्रिपङ्कजद्वंद्वनखचन्द्रमणिप्रभाः । आहुः पूर्णब्रह्मणोऽपि कारणं वेददुर्गमम् ॥ ११६
[...]शसौरभानन्तकोट्यंशो विश्वमोहनः । तत्स्पर्शपुष्पगन्धादिनानासौरभसंभवः ॥ ११७
[...]प्रिया प्रकृतिस्त्वाद्या राधिका कृष्णवल्लभा । तत्कलाकोटिकोट्यंशा दुर्गाद्यास्त्रिगुणात्मिकाः ॥
[...]स्या अङ्घ्रिरजःस्पर्शात्कोटिविष्णुः प्रजायते ॥ ११८

इति श्रीमहापुराणे पाद्मे पातालखण्डे श्रीकृष्णचरिते वृन्दावनमाहात्म्य एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५२०७

अथ सप्ततितमोऽध्यायः ।

पार्वत्युवाच—
[...]यदोकारणमेतस्य ये वा पारिषदाः प्रभोः । तदहं श्रोतुमिच्छामि कथयस्व दयानिधे ॥ १
ईश्वर उवाच—
राधया सह गोविन्दं स्वर्णसिंहासने स्थितम् । पूर्वोक्तरूपलावण्यं दिव्यभूषाम्बरस्रजम् ॥ २
त्रिभङ्गिमञ्जुसुस्निग्धं गोपीलोचनतारकम् । तद्बाह्ये योगपीठे च स्वर्णसिंहासनावृते ॥ ३
प्रत्यङ्गरभसावेशाः प्रधानाः कृष्णवल्लभाः । ललिताद्याः प्रकृत्यंशा मूलप्रकृती राधिका ॥ ४
संमुखे ललिता देवी श्यामला वायुकोणके । उत्तरे श्रीमती धन्या ऐशान्यां श्रीहरिप्रिया ॥ ५
विशाखा च तथा पूर्वे शैव्या चाग्नौ ततः परम् । पद्मा च दक्षिणे पश्चान्नैर्ऋते क्रमशः स्थिताः ॥
योगपीठे केशराग्रे चारुचन्द्रावती प्रिया । अष्टौ प्रकृतयः पुण्याः प्रधानाः कृष्णवल्लभाः ॥ ७
[*प्रधानप्रकृतिस्त्वाद्या राधा चन्द्रावती समा । चन्द्रावली चित्ररेखा चन्द्रा मदनसुन्दरी ॥ ८
प्रिया च श्रीमधुमती चन्द्ररेखा हरिप्रिया । षोडशाऽऽद्याः प्रकृतयः प्रधानाः कृष्णवल्लभाः]॥९
वृन्दावनेश्वरी राधा तथा चन्द्रावली प्रिया । अभिन्नगुणलावण्यसौन्दर्यैश्वर्यलोचनाः ॥ १०
मनोहरा मुग्धवेषाः किशोरीवयसोज्ज्वलाः । अग्रे [†सरास्तथा चान्या गोपकन्याः सहस्रशः ॥
शुद्धकाञ्चनपुञ्जाभाः सुप्रसन्नाः सुलोचनाः । तद्रूपहृदयारूढास्तदाश्लेषसमुत्सुकाः ॥ १२
श्यामामृतरसे मग्नाः]स्फुरत्तद्भावमानसाः । नेत्रोत्पलार्चिते कृष्णपादाब्जेऽर्पितचेतसः ॥ १३

* एतच्चिह्नान्तर्गतः पाठः ख. ङ. च. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च छ. ञ. ढ. [पुस्]तकस्थः ।

१ झ. ञ. विदुः । २ झ. °दाकर° । ३ ञ. °त्रभुजसु° । ४ झ. केसरा° । ५ झ. °वलिप्रि° । ६ क. °र्यौश्चाख्लो° ।

श्रुतिकन्यास्ततो दक्षे सहस्रायुतसंयुताः। जगन्मुग्धीकृताकारा हृद्गतिकृष्णलालसाः ॥ २६४
नानासत्त्वस्वरालापमुग्धीकृतजगत्रयाः। तन्निगूढरहस्यानि गायन्त्यः प्रेमविह्वलाः ॥ २६५
देवकन्यास्ततः सव्ये दिव्यवेषा रसोज्ज्वलाः। नानावैदग्ध्यनिपुणा दिव्यभावभरान्विताः ॥ २६६
सौन्दर्यातिशयाढ्याश्च कटाक्षातिमनोहराः। निर्लज्जास्तत्र गोविन्दे तदङ्गस्पर्शनोत्सुकाः ॥ २६७
तद्भावमग्नमनसः स्मितसाचिनिरीक्षणाः। मन्दिरस्य ततो बाह्ये प्रियया विशदावृते(?) ॥ २६८
समानवेषवयसः समानबलपौरुषाः। समानगुणकर्माणः समानाभरणाः प्रियाः ॥ २६९
समानस्वरसंगीतवेणुवादनतत्पराः। श्रीदामा पश्चिमद्वारे वसुदामा तथोत्तरे ॥ २७०
सुदामा च तथा पूर्वे किङ्किणी चापि दक्षिणे। तद्बाह्ये स्वर्णपीठे च सुवर्णमन्दिरावृते ॥ २१
स्वर्णवेद्यन्तरस्थे तु स्वर्णाभरणभूषिते। स्तोककृष्णांशुभद्राद्यैर्गोपालैरयुतायुतैः ॥ २२
शृङ्गवीणावेणुवेत्रवयोवेषाकृतिस्वरैः। तद्गुणध्यानसंयुक्तैर्गायद्भी रसविह्वलैः ॥ २३
चित्रार्पितैश्चित्ररूपैः सदाऽऽनन्दांशु(न्दाश्रु)वर्षिभिः। पुलकाकुलसर्वाङ्गैर्योगीन्द्रैरिव विस्मितैः ॥ २४
क्षरत्पयोभिर्गोवृन्दैरसंख्यातैरुपावृतम्। तद्बाह्ये स्वर्णप्राचीरे कोटिसूर्यसमुज्ज्वले ॥ २५
चतुर्दिक्षु महोद्यानमञ्जुसौरभमोहिते। पश्चिमे संमुखे श्रीमत्पारिजाततद्रुमाश्रये ॥ २६
तत्राधस्तु स्वर्णपीठे स्वर्णमन्दिरमण्डिते। तन्मध्ये मणिमाणिक्यदिव्यसिंहासनोज्ज्वले ॥ २७
तत्रोपरि परानन्दं वासुदेवं जगत्प्रभुम्। त्रिगुणातीतचिद्रूपं सर्वकारणकारणम् ॥ २८
इन्द्रनीलघनश्यामं नीलकुञ्चितकुन्तलम्। पद्मपत्रविशालाक्षं मकराकृतिकुण्डलम् ॥ २९
चतुर्भुजं तु चक्रासिगदाशङ्खाम्बुजायुधम्। आद्यन्तरहितं नित्यं प्रधानं पुरुषोत्तमम् ॥ ३०
ज्योतीरूपं महद्धाम पुराणं वनमालिनम्। पीताम्बरधरं स्निग्धं दिव्यभूषणभूषितम् ॥ ३१
दिव्यानुलेपनं राजच्चित्रिताङ्गमनोहरम्। रुक्मिणी सत्यभामा च नाग्नजिती सुलक्षणा ॥ ३२
मित्रविन्दाऽनुविन्दा सुनन्दा जाम्बवती प्रिया। सुशीला चाष्ट महिला वासुदेवप्रियास्ततः ॥ ३३
उँद्धजित्योः पारिषदावृतयोर्भक्तितत्पराः(?)। उत्तरे सुमहोद्याने हरिचन्दनसंश्रये ॥ ३४
तत्राधस्तु स्वर्णपीठे मणिमण्डपमण्डिते। तन्मध्ये हेमनिर्माणदले सिंहासनोज्ज्वले ॥ ३५
तत्रैव सह रेवत्या संकर्षणहलायुधम्। ईश्वरस्य प्रियानन्तमभिन्नगुणरूपिणम् ॥ ३६
शुद्धस्फटिकसंकाशं रक्ताम्बुजदलेक्षणम्। नीलपट्टधरं स्निग्धं दिव्यभूषास्रगम्बरम् ॥ ३७
मधुपाने सदाऽऽसक्तं मधुघूर्णितलोचनम्। प्रवीरदक्षिणे भागे मञ्जुनाभ्यन्तरस्थिते ॥ ३८
संतानवृक्षमूले तु मणिमन्दिरमण्डितम्। तन्मध्ये मणिमाणिक्यदिव्यसिंहासनोज्ज्वले ॥ ३९
प्रद्युम्नं च रतीदेवं तत्रोपरि सुखस्थितम्। जगन्मोहनसौन्दर्यसारश्रेणीरसात्मकम् ॥ ४०
असिताम्भोजपुञ्जाभमरविन्ददलेक्षणम्। दिव्यालंकारभूषाभिर्दिगव्यन्धानुलेपनम् ॥ ४१
जगन्मुग्धीकृताशेषसौन्दर्याश्चर्यविग्रहम्। पूर्वोद्याने महारम्ये सुरद्रुमसमाश्रये ॥ ४२
तत्राधस्तु स्वर्णपीठे हेममण्डपमण्डिते। तस्य मध्यस्थिते राजद्दिव्यासिंहासनोज्ज्वले ॥ ४३
दिव्योषया समं श्रीमदनिरुद्धं जगत्पतिम्। सान्द्रानन्दघनश्यामं सुस्निग्धं नीलकुन्तलम् ॥ ४४
सुभ्रून्नतलताभङ्गं सुकपोलं सुनासिकम्। सुग्रीवं सुन्दरं वक्षोमनोहरमनोहरम् ॥ ४५
किरीटिनं कुण्डलिनं कण्ठभूषाविभूषितम्। मञ्जुमञ्जीरमाधुर्याश्चर्यसौन्दर्यविग्रहम् ॥ ४६

१ ख. सेव्यो। २ ञ. ॰ष्गांसुभ॰। ३ ख. नन्दपुत्रं। ४ झ. उद्धुवत्योः। ञ. उद्भूवत्योः। ५ ञ. ॰वृतयो॰। ॰मू। पत्री॰। ७ ख. ॰धुर्यसौन्दर्यं श्यामवि॰।

[..]त्य गणाराध्यं यत्र संगीतकप्रियम् । पूर्णब्रह्म सदानन्दं शुद्धसत्त्वस्वरूपिणम् ॥ ४७
[..]र्वे चान्तरिक्षे च विष्णुं सर्वेश्वरेश्वरम् । अनादिमाद्यं चिद्रूपं चिदानन्दं परं विभुम् ॥४८
[..]तातीतमव्यक्तं नित्यमक्षयमव्ययम् । समेघपुञ्जमाधुर्यसौन्दर्यश्यामविग्रहम् ॥ ४९
[..]कुञ्चितसुस्निग्धकेशपाशातिसुन्दरम् । अरविन्ददलस्निग्धसुदीर्घचारुलोचनम् ॥ ५०
[..]टकुण्डलोद्दण्डं शुद्धसत्त्वात्मभिर्वृतम् । आत्मारामैश्च चिद्रूपैस्तन्मूर्तिध्यानतत्परैः ॥ ५१
[..]ारूढतद्ध्यानैर्नासाग्रन्यस्तलोचनैः । क्रियते हैतुकी मूर्तिर्हृद्वृत्तिकायभाषितैः(?) ॥ ५२
[..]न्ये यक्षगन्धर्वसिद्धविद्याधरादिभिः । सुकान्तैरप्सरःसंघैर्नृत्यसंगीततत्परैः ॥ ५३
[..]तदङ्गभजनं कामं वाञ्छद्भिः कृष्णलालसैः । तदग्रे वैष्णवैः सर्वैश्चान्तरिक्षे सुखासने] ॥ ५४
[..]ादनारदाद्यैश्च कुमारशुकवैष्णवैः । जनकाद्यैर्लसद्भावैर्हृद्भावस्फूर्तितत्परैः ॥ ५५
[..]लकाकुलसर्वाङ्गैः स्फुरत्प्रेमसमाकुलैः । रहस्यामृतसंसिक्तैरर्धयुग्माक्षरो मनुः ॥ ५६
[म]न्त्रचूडामणिः प्रोक्तः सर्वमन्त्रैककारणम् । सर्वदेवस्य मन्त्राणां कैशोरमन्त्रहैतुकम्(?) ॥ ५७
सर्वकैशोरमन्त्राणां हेतुश्चूडामणिर्मनुः । जपं कुर्वन्ति मनसा पूर्णप्रेमसुखाश्रयाः ॥ ५८
[वा]ञ्छन्ति तत्पदाम्भोजे निश्चलं प्रेमसाधनम् । तद्बाह्ये स्फटिकाद्युच्चप्राचीरे सुमनोहरे ॥ ५९
कुङ्कुमैः सितरक्ताद्यैश्चतुर्दिक्षु समुज्ज्वलैः । शुक्लं चतुर्भुजं विष्णुं पश्चिमे द्वारपालकम् ॥ ६०
शङ्खचक्रगदापद्मकिरीटादिविभूषितम् । रक्तं चतुर्भुजं पद्मशङ्खचक्रगदायुधम् ॥ ६१
किरीटकुण्डलोद्दीप्तं द्वारपालकमुत्तरे । गौरं चतुर्भुजं विष्णुं शङ्खचक्रगदायुधम् ॥ ६२
किरीटकुण्डलाद्यैश्च शोभितं वनमालिनम् । पूर्वद्वारे द्वारपालं गौरं विष्णुं प्रकीर्तितम् ॥ ६३
कृष्णवर्णं चतुर्बाहुं शङ्खचक्रादिभूषणम् । दक्षिणद्वारपालं तु श्रीविष्णुं कृष्णवर्णकम् ॥ ६४
श्रीकृष्णचरितं ह्येतद्यः पठेत्प्रयतः शुचिः । शृणुयाद्वाऽपि यो भक्त्या गोविन्दे लभते रतिम् ६५

इति श्रीमहापुराणे पाद्मे पातालखण्डे श्रीकृष्णचरिते सप्ततितमोऽध्यायः ॥ ७० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५२७२

---

अथैकसप्ततितमोऽध्यायः ।

---

श्रीदेव्युवाच—

भगवन्सर्वभूतेश सर्वात्मन्सर्वसंभव । देवदेव महादेव सर्वज्ञ करुणाकर ॥ १
त्वयाऽनुकम्पितैवाहं +भूयोऽप्याहानुकम्पया । त्रैलोक्यमोहना मन्त्रास्त्वया मे कथिताः प्रभो २
तेन देवेन गोपीभिर्महामोहनरूपिणा । केन केन विशेषेण चिक्रीडे तद्वदस्व मे ॥ ३

महादेव उवाच—

[ए]कदा वादयन्वीणां नारदो मुनिपुंगवः । कृष्णावतारमाज्ञाय प्रययौ नन्दगोकुलम् ॥ ४
[ग]त्वा तत्र महायोगमायेशं विभुमच्युतम् । बालनाट्यधरं देवं ददर्श नन्दवेश्मनि ॥ ५
[सु]कोमलपटास्तीर्णहेमपर्यङ्कोपरि । शयानं गोपकन्याभिः प्रेक्ष्यमाणं सदा मुदा ॥ ६

* एतच्चिह्नान्तर्गतः पाठः क.ख. ङ. छ. ज. ञ ड. पुस्तकस्थः । + पुरुषव्यत्यय आर्षः ।

१ क. ञ. °कुन्तलसु° । २ क. ख. ङ. च. छ. ड. °की भक्तिर्हृ° । ३ ख. °मू । देवस्य सर्वम° । ४ झ. °ब्रहेतु° । ५ ञ. °हे स्फुट° । ६ ख. ङ. च. छ. ड. रतिम् ।

अतीव सुकुमाराङ्गं मुग्धं मुग्धविलोकनम् । विस्रस्तनीलकुटिलकुन्तलावलिमण्डलम् ॥
किंचित्स्मिताङ्कुरव्यञ्जदेकद्वरदकुड्मलम् । स्वप्रभाभिर्भासयन्तं समस्तभवनोदरम् ॥
दिग्वाससं समालोक्य सोऽतिहर्षमवाप ह । संभाष्य गोपतिं नन्दमाह सर्वं प्रभुप्रियः ॥
नारायणपराणां तु जीवनाद्यतिदुर्लभम् । अस्य प्रभावमतुलं न जानन्तीह केचन ॥
भवब्रह्मादयोऽप्यस्मिन्रतिं वाञ्छन्ति शाश्वतीम् । चरितं चास्य बालस्य सर्वेषामेव हर्षणम् ।
मुदा गायन्ति शृण्वन्ति त्वभिनन्दन्ति तादृशाः । अस्मिंस्तव सुतेऽचिन्त्यप्रभावे स्निग्धमानसा
तरिष्यन्ति न तेषां वै भवबाधा भविष्यति । मुञ्चेहपरलोकाशाः सर्वा बल्लवसत्तम ॥ १
एकान्तेनैकभावेन बालेऽस्मिन्प्रीतिमाचर । इत्युक्त्वा नन्दभवनान्निष्क्रान्तो मुनिपुङ्गवः ॥ १
तेनार्चितो विष्णुबुद्ध्या प्रणम्य च विसर्जितः । अथासौ चिन्तयामास महाभागवतो मुनिः ॥ १
अस्य कान्ता भगवती लक्ष्मीर्नारायणे हरौ । विधाय गोपिकारूपं क्रीडार्थं शार्ङ्गधन्वनः ॥ १
अवश्यमवतीर्णा सा भविष्यति न संशयः । तामहं विचिनोम्यद्य गेहे गेहे व्रजौकसाम् ॥ १
विमृश्यैवं मुनिवरो गेहानि व्रजवासिनाम् । प्रविवेशातिथिर्भूत्वा विष्णुबुद्ध्या सुपूजितः ॥ १
सर्वेषां बल्लवादीनां रतिं नन्दसुते पराम् । दृष्ट्वा मुनिवरः सर्वान्मनसा प्रणनाम ह ॥ १
गोपानां च गृहे बालां ददर्श श्वेतरूपिणीम् । स दृष्ट्वा तर्कयामास रमा एषा न संशयः ॥ २
प्रविवेश ततो धीमान्नन्दसख्युर्महात्मनः । कस्यचिद्गोपवर्यस्य भानुनाम्नो गृहं महत् ॥ २
अर्चितो विधिवत्तेन सोऽप्यपृच्छन्महामनाः । साधो त्वमसि विख्यातो धर्मनिष्ठतया भुवि ॥ २
तवाहं धनधान्यादिसमृद्धिं संविभावये । कश्चित्ते योग्य पुत्रोऽस्ति कन्या वा शुभलक्षणा ॥ २
यतस्ते कीर्तिरखिलं लोकं व्याप्य भविष्यति । इत्युक्तो मुनिवर्येण भानुरानीय पुत्रकम् ॥ २
महातेजस्विनं दृप्तं नारदायाभ्यवादयत् । दृष्ट्वा मुनिवरस्तं तु रूपेणाप्रतिमं भुवि ॥ २
पद्मपत्रविशालाक्षं सुग्रीवं सुन्दरभ्रुवम् । चारुदन्तं चारुकर्णं सर्वावयवसुन्दरम् ॥ २
तं समाश्लिष्य बाहुभ्यां स्नेहाश्रूणि विमुच्य च । ततः सगद्गदं माह प्रणयेन महामुनिः ॥ २

नारद उवाच—

अयं शिशुस्ते भविता सुसखा रामकृष्णयोः । विहरिष्यति ताभ्यां च रात्रिंदिन(व)मतन्द्रितः ॥ २
तत आभाष्य तं गोपप्रवरं मुनिपुंगवः । यदा गन्तुं मनश्चक्रे तत्रैवं भानुरब्रवीत् ॥ २

भानुरुवाच—

एकाऽस्ति पुत्रिका देव देवपत्न्युपमा मम । कनीयसी शिशोरस्य जडान्धबधिराकृतिः ॥ ३
उत्साहाद्वृद्धये याचे त्वां वरं भगवत्तम । प्रसन्नदृष्टिमात्रेण सुस्थिरां कुरु बालिकाम् ॥ ३
श्रुत्वैवं नारदो वाक्यं कौतुकाकृष्टमानसः । अथ प्रविश्य भवनं लुठन्तीं भूतले सुताम् ॥ ३
उत्थाप्याङ्के वि(नि)धायातिस्नेहविह्वलमानसः । [*भानुरप्याययौ भक्तिनम्रो मुनिवरान्तिकम् ३
अथ भागवतश्रेष्ठः कृष्णस्यातिप्रियो मुनिः । दृष्ट्वा तस्याः परं रूपमदृष्टाश्रुतमद्भुतम् ] ॥ ३
अभूतपूर्वसमं मुग्धो हरिप्रेमा महामुनिः । विगाह्य परमानन्दसिन्धुमेकरसायनम् ॥ ३
मुहूर्तद्वितयं तत्र मुनिरासीच्छिलोपमः । मुनीन्द्रः प्रतिबुद्धस्तु शनैरुन्मील्य लोचने ॥ ३

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. ञ. ट. पुस्तकस्थः ।

१ ङ. °मृ । सुप्र° । २ ङ. °स्तभुव° ।

...मयमापन्नस्तूष्णीमेव स्थितोऽभवत् । अन्तर्हृदि महाबुद्धिरेवमेवं व्यचिन्तयत् ॥ ३७
...सर्वेषु लोकेषु मया स्वच्छन्दचारिणा । अस्या रूपेण सदृशी दृष्टा नैव च कुत्रचित् ॥३८
...के रुद्रलोक इन्द्रलोके च मे गतिः । न कोऽपि शोभाकोट्यंशः कुत्राप्यस्या विलोकितः ॥
...या भगवती दृष्टा शैलेन्द्रनन्दिनी । यस्या रूपेण सकलं मुह्यते सचराचरम् ॥ ४०
...यस्याः सुकुमाराङ्गी लक्ष्मीं नाऽऽप्नोति कर्हिचित् । लक्ष्मीः सरस्वती कान्तिर्विद्याद्याश्च वरस्त्रियः
...मपि स्पृशन्त्यश्च कदाचिन्नैव(न्नेति) दृश्यते । विष्णोर्येन्मोहनं रूपं हरो येन विमोहितः ॥४२
... दृष्टं च तदपि कुतोऽस्याः सदृशं भवेत् । ततोऽस्यास्तत्त्वमाज्ञातुं न मे शक्तिः कथंचन ४३
...ये चापि न जानन्ति प्रायेणैनां हरेः प्रियाम् । अस्याः संदर्शनादेव गोविन्दचरणाम्बुजे ॥४४
... प्रेमर्द्धिरभूत्सा मे भूतपूर्वा न कर्हिचित् । एकान्ते नौमि भवतीं दर्शयित्वाऽतित्रैभवम् ॥ ४५
...णस्य संभवत्यस्या रूपं परमतुष्टये । विमृश्यैवं मुनिर्गोपप्रवरं प्रेष्य कुत्रचित् ॥ ४६
...भृते परितुष्टाव बालिकां दिव्यरूपिणीम् । अपि देवि महायोगे मायेश्वरि महाप्रभे ॥ ४७
...मोहनदिव्याङ्गि महामाधुर्यवर्षिणि । महाद्भुतरसानन्दशिथिलीकृतमानसे ॥ ४८
...भाग्येन केनापि गताऽसि मम दृक्पथम् । नित्यमन्तःमुखा दृष्टिस्तव देवि विभाव्यते ॥ ४९
...न्तरेव महानन्दपरितृप्तेव लक्ष्यसे । प्रसन्नं मधुरं सौम्यमिदं ते मुखमण्डलम् ॥ ५०
...यनक्ति परमाश्चर्यं कमप्यन्तःसुखोदयम् । रजःसंबन्धिकलिकाशक्तिस्तु त्वाऽतिशोभने(?) ॥५१
...ष्टिस्थितिसमाहाररूपिणी त्वमधिष्ठिता । तत्त्वं विशुद्धसत्त्वा सुशक्तिर्विद्यात्मिका परा ॥ ५२
...मानन्दसंदोहं दधती वैष्णवं परम् । कलयाऽऽश्चर्यविभवे ब्रह्मरुद्रादिदुर्गमे ॥ ५३
...गीन्द्राणां ध्यानपथं न त्वं स्पृशसि कर्हिचित् । इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिस्तवेशितुः ५४
...ांशमात्रमित्येवं मनीषा मे प्रवर्तते । मायाविभूतयोऽचिन्त्यास्तन्मायार्भकमायिनः ॥ ५५
...शस्य महाविष्णोस्ताः सर्वास्ते कलाः कलाः । आनन्दरूपिणी शक्तिस्त्वमीश्वरी न संशयः ॥
...या च क्रीडते कृष्णो नूनं वृन्दावने वने । कौमारेणैव रूपेण त्वं विश्वस्य च मोहिनी ॥ ५७
...रुण्यवयसा स्पृष्टं कीदृक्ते रूपमद्भुतम् । कीदृशं तव लावण्यं लीलाहासेक्षणान्वितम् ॥ ५८
...रेमानुषलोभेन पराश्चर्यमयं भवेत् । द्रष्टुं तदहमिच्छामि रूपं ते हरिवल्लभम् ॥ ५९
...न नन्दसुतः कृष्णो मोहं समुपयास्यति । इदानीं मम कारुण्यान्निजरूपं महेश्वरि ॥ ६०
...गताय प्रपन्नाय प्रकाशयितुमर्हसि । इत्युक्त्वा मुनिवर्येण तदनुव्रतचेतसा ॥ ६१
...मायेश्वरीं नत्वा महानन्दमयीं पराम् । महाप्रेमभरोत्कण्ठाव्याकुलाङ्गीं शुभेक्षणाम् ॥ ६२
...क्षमाणेन गोविन्दमेवं वर्णयता स्थितम् । जय कृष्ण मनोहारिज(ञ्ज)य वृन्दावनप्रिय ॥ ६३
...य भ्रूभङ्गललित जय वेणुरवाकुल । जय बर्हकृतोत्तंस जय गोपीविमोहन ॥ ६४
...यकुङ्कुमलिप्ताङ्ग जय रत्नविभूषण । कदाऽहं त्वत्प्रसादेन त्वनया दिव्यरूपया ॥ ६५
...हितं नवतारुण्यमनोहरवपुःश्रिया । विलोकयिष्ये कैशोरमोहन त्वां जगत्पते ॥ ६६
...वं कीर्तयतस्तस्य तत्क्षणादेव सा पुनः । बभूव दधती दिव्यं रूपमत्यन्तमोहनम् ॥ ६७
...तुर्दशाब्दवयसा ललितं ललितं परम् । समानवयसश्चान्यास्तदैव व्रजबालिकाः ॥ ६८
...गत्य वेष्टयामासुर्दिव्यभूषाम्बरस्रजः । मुनीन्द्रः स्तुतिनिश्चेष्टो बभूवाऽऽश्चर्यमोहितः ॥ ६९

१ अ. °त्वा तु वै° । २ क. अ. °मानन्दं क° । ३ ख. °म् । का त्वयाऽऽ° । अ. °म् । कां त्व° । ४ क. अ. °कशायि° । ५ अ. कलाक° । ६ क. ख. ङ. च. छ. अ. ड. हरिवल्लभे । ७ अ. °मकरो° । ८ ड. चलितं । ९ ख. अ. °स्रजम् । मु° ।

बालास्तास्तु वयस्यायाश्चरणाम्बुकणैर्मुनिम् । निषिच्य बोधयामासुरूचुश्च कृपयाऽन्विताः ॥७
बाला ऊचुः— ७
मुनिवर्य महाभाग महायोगेश्वरेश्वर । त्वयैव परया भक्त्या भगवान्हरिरीश्वरः ॥ ७
नूनमाराधितो देवो भक्तानां कामपूरकः । यदियं ब्रह्मरुद्राद्यैर्देवैः सिद्धमुनीश्वरैः ॥ ७
महाभागवतैश्चान्यैर्दुर्दर्शा दुर्गमाऽपि च । अत्यद्भुतवयोरूपमोहिनी हरिवल्लभा ॥ ८
केनाप्यचिन्त्यभाग्येन तव दृष्टिपथं गता । उत्तिष्ठोत्तिष्ठ विप्रर्षे धैर्यमालम्ब्य सत्वरम् ॥ ९
एनां प्रदक्षिणीकृत्य नमस्कुरु पुनः पुनः । किं न पश्यसि चार्वङ्गीमत्यन्तव्याकुलामिव ॥ ७०
अस्मिन्नेव क्षणे नूनमन्तर्धानं गमिष्यति । नानया सह संलापः कथंचित्ते भविष्यति ॥ ७१
दर्शनं च पुनर्नास्याः प्राप्स्यसि ब्रह्मवित्तम । किंतु वृन्दावने वाऽपि भात्यशोकलता शुभा ७२
सर्वकालेऽपि पुष्पाढ्या सर्वदिग्व्यापिसौरभा । गोवर्धनाददूरेण कुसुमाख्यसरस्तटे ॥ ७३
तन्मूले ह्यर्धरात्रे तु द्रक्ष्यस्यस्मानशेषतः । श्रुत्वैवं वचनं तासां स्नेहविक्लवचेतसाम् ॥ ७९
यावत्प्रदक्षिणीकृत्य प्रणमेद्दण्डवन्मुनिः । मुहूर्तद्वितयं बालां नानानिर्माणशोभनाम् ॥ ८०
आहूय भानुं प्रोवाच नारदः सर्वशोभनाम् । एवंस्वभावा बालेयं न साध्या दैवतैरपि ॥ ८१
किं तु यद्गृहमेतस्याः पदचिह्नविभूषितम् । तत्र नारायणो देवः सर्वदेवगणैः सह ॥ ८२
लक्ष्मीश्च वसते नित्यं सर्वाभिश्चैव सिद्धिभिः । अद्य एनां वरारोहां सर्वभूषणभूषणाम् ॥ ८३
देवीमिव परां गेहे रक्ष यत्नेन सत्तम । इत्युक्त्वा मनसैवैनां महाभागवतोत्तमः ॥ ८४
तद्रूपमेव संस्मृत्य प्रविष्टो गहनं वनम् । अशोकलतिकामूलमासाद्य मुनिपुङ्गवः ॥ ८५
प्रतीक्षमाणो देवीं तां तत्रैवाऽऽगमनेन हि । स्थितोऽत्र प्रेमविकलश्चिन्तयन्कृष्णवल्लभाम् ॥ ८६
अथ मध्यनिशाभागे युवत्यः परमाद्भुताः । पूर्वदृष्टास्तथाऽन्याश्च विचित्राभरणस्रजः ॥ ८७
दृष्ट्वा मनसि संभ्रान्तो दण्डवत्पतितो भुवि । परिवार्य मुनिं सर्वास्तास्ताः प्रविविशुः शुभाः ८८
प्रष्टुकामोऽपि स मुनिः किंचित्स्वाभिमतं प्रियम् । नाशकत्प्रेमलावण्यप्रियभाषाप्रधर्षितः ॥ ८९
अथाऽऽगता मुनिश्रेष्ठं कृताञ्जलिमिव स्थितम् । भक्तिभारानतग्रीवं सविस्मयं ससंभ्रमम् ॥ ९०
सुविनीततमं प्राह तत्रैव करुणान्विता । अशोकमालिनी नाम्ना अशोकवनदेवता ॥ ९१

अशोकमालिन्युवाच—

अशोककलिकायां तु वसाम्यस्यां महामुने । रक्ताम्बरधरा नित्यं रक्तमाल्यानुलेपना ॥ ९२
रक्तसिन्दूरकलिका रक्तोत्पलवतंसिनी । रक्तमाणिक्यकेयूरमुकुटादिविभूषिता ॥ ९३
एकदा प्रियया सार्धं विहरन्त्यो मधूत्सवे । तत्रैव मिलिता गोपबालिकाश्चित्रवाससः ॥ ९४
अहं चाशोकमालाभिर्गोपवेषधरं हरिम् । रमारूपाश्च ताः सर्वा भक्त्या सम्यगपूजयम् ॥ ९५
ततः प्रभृति चैतासां मध्ये तिष्ठामि सर्वदा । भूषाभिर्विविधाभिश्च तोषयित्वा रमापतिम् ॥ ९६
परापरमहं सर्वं विजानामीह सर्वतः । गोगोपगोपिकादीनां रहस्यं चापि वेद्म्यहम् ॥ ९७
तव जिज्ञासितं चापि हृदि प्रतिविभाषितम् । तां देवीमद्भुताकारामद्भुतानन्ददायिनीम् ॥ ९८
हरेः प्रियां हिरण्याभां हीरकोज्ज्वलमुद्रिकाम् । कथं पश्यामि लोलाक्षीं कथं वा तत्पदाम्बुजम् ॥
आराध्यतेऽतिभक्त्येति त्वया ब्रह्मन्विमर्शितम् । तत्र ते कथयिष्यामि वृत्तान्तं सुमहात्मनाम् १००

१ क. ख. ङ. च. छ. ञ. ड. °विह्वलचे° । २ झ. ञ. °यमानं प्रो° । ३ झ. ञ. °मन निशि । स्थि° । ४ ख. छ. °त्रैका क° । ५ क. ञ. °दा । भक्तिभि° ।

सरसि स्थित्वा तपस्तीव्रमुपेयुषाम् । जपतां सिद्धिमन्त्रांश्च ध्यायतां हरिमीश्वरम् ॥ १०१
काङ्क्षतां नित्यं तस्या एव पदाम्बुजम् । एकसप्ततिसाहस्रसंख्यातानां महौजसाम् ॥
कथयाम्यद्य तद्रहस्यं परं वने ॥ १०२

इति श्रीमहापुराणे पाद्मे पातालखण्डे श्रीराधाकृष्णमाहात्म्यकथनं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५३७४

अथ द्विसप्ततितमोऽध्यायः ।

ईश्वर उवाच—
काग्रमना भूत्वा शृणु देवि वरानने । आसीदुग्रतपा नाम मुनिरेको दृढव्रतः ॥ १
ग्निको ह्यग्निभक्षश्च चचारात्यद्भुतं तपः । जजाप परमं जाप्यं मन्त्रं पञ्चदशाक्षरम् ॥ २
काममन्त्रेण पुटितं कामं कामवरप्रदात् । कृष्णायेति पदं स्वाहासहितं सिद्धिदं परम् ॥ ३
ध्यौ च श्यामलं कृष्णं रासोन्मत्तं वरोत्सुकम् । पीतपट्टधरं वेणुं करेणाधरमर्पितम् ॥ ४
वयौवनसंपन्नं कर्षन्तं पाणिना प्रियाम् । एवं ध्यानपरः कल्पशतान्ते देहमुत्सृजन् ॥ ५
सुनन्दनामगोपस्य कन्याऽभूत्स महामुनिः । सुनन्देति समाख्याता या वीणां बिभ्रति करे ॥ ६
मुनिरन्यः सत्यतपा इति ख्यातो महाव्रतः । स शुष्कपत्रभुक्तोये प्रजजाप परं मनुम् ॥ ७
त्यन्तं कामबीजेन पुटितं च दशाक्षरम् । स प्रदध्यौ मुनिवरश्चित्रवेषधरं हरिम् ॥ ८
त्वा रमाया दोर्वल्लीद्वितयं कङ्कणोज्ज्वलम् । नृत्यन्तं तन्मुदं तं च संश्लिष्यन्तं मुहुर्मुहुः ॥ ९
सन्तमुच्चैरानन्दतरङ्गं जठराम्बरे । दधतं वेणुमाजानुवैजयन्त्या विराजितम् ॥ १०
दाम्भःकणसंसिक्तललाटवनिताननम् । त्यक्त्वा त्यक्त्वा स वै देहं तपसा च महामुनिः॥ ११
शकल्पान्तरे चायं जातो नन्दवनादिह । सुभद्रनाम्नो गोपस्य कन्या भद्रेति विश्रुता ॥ १२
स्याः पृष्ठतले दिव्यं व्यजनं परिदृश्यते । हरिधामाभिधानस्तु कश्चिदासीन्महामुनिः ॥ १३
ऽतप्यत तपः कृच्छ्रं नित्यं त्यक्त्वैव भोजनम् । आशुसिद्धिकरं मन्त्रं विंशत्यर्णं प्रजप्तवान्॥ १४
नन्तरं कामबीजादध्यारूढं तु दैवतम् । माया तत्पुरतो व्योमहंसास्रग्द्युतिचन्द्रकम् ॥ १५
तो दशाक्षरं पश्चान्नमोयुक्तं स्मरादिकम् । दध्यौ वृन्दावने रम्ये माधवीमण्डपे प्रभुम् ॥ १६
त्तानशायिनं चारुपल्लवास्तरणोपरि । कदाचिदतिकामार्तवल्लव्या रक्तनेत्रया ॥ १७
क्षोजयुगमाच्छाद्य विपुलोरःस्थलं मुहुः । संचुम्बमानं गण्डान्तस्तप्यमानवदच्छदम् ॥ १८
कलयन्तं प्रियां दोर्भ्यां सहासं समुदाऽद्भुतम् । स मुनिश्च बहून्देहांस्त्यक्त्वा कल्पत्रयान्तरे॥ १९
सारङ्गनाम्नो गोपस्य कन्याऽभूच्छुभलक्षणा । रङ्गवेणीति विख्याता निपुणा चित्रकर्मणि ॥ २०
यस्या दन्तेषु दृश्यन्ते चित्रिताः शोणबिन्दवः । ब्रह्मवादी मुनिः कश्चिज्जाबालिरिति विश्रुतः॥
स तपःसु रतो योगी विचरन्पृथिवीमिमाम् । स एकस्मिन्महारण्ये योजनायतविस्तृते ॥ २२
इच्छया गतोऽपश्यदेकां वापीं सुशोभनाम् । सर्वतः स्फटिकाबन्धतटां स्वादुजलान्विताम्॥ २३
कासिकमलामोदवायुना परिशीलिताम् । तस्याः पश्चिमदिग्भागे मूले वटमहीरुहे ॥ २४
अपश्यत्तापसीं कांचित्कुर्वतीं दारुणं तपः । तारुण्यवयसा युक्तां रूपेणातिमनोहराम् ॥ २५

१ झ. सिद्धम° । २ झ. ञ. तटे । ३ झ. °ढं तदैव तु । मा° । ञ. °ढं तदेव तु । मा° । ४ ञ. °न्तस्तृप्य° ।

